# 𑌸𑌂𑌸𑍍𑌕𑍃𑌤𑌶𑍍𑌰𑍀𑌃

# ॥ संस्कृतश्रीः ॥

संस्कृतविद्यासमिति पत्रिका



**SAMSKRTAŚRĪ** | **ஸம்ஸ்க்ருதஸ்ரீ**

A Fortnightly Bulletin of the Samskrit Education Society, Madras.



Annual Subscription Rs. 8-00

Single Copy 0-40 Ps.

Life Subscription Rs. 100-00

9, Single Mall Street, Tiruchirapalli-620 002.

माला — 4 पुष्पम् — 2

वागीश्वर्यै नमः

हंसारूढा भसितहरहारेन्दुकुन्दावदाता
वाणी मन्दस्मितयुतमुखी मौलिबद्धेन्दुरेखा ।
विद्यावीणामृतमयघटाक्षस्रगादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

कलि 5082—रौद्र-तुला-22 (4-2) 7—11—80

करधात्रीकृत-नतजन-करधात्रीकृतपरात्मपरविद्याम् ।
धात्रीधात्रीमेकां अनाथधात्रीं नमामि जगदम्बाम् ॥

## भाषन्ते मानुषीमिह संस्कृताम्

"अन्योन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु" इति दमयन्तीस्वयंवरमण्टपे संवृत्ततया श्रीहर्षोल्लिखितं भावमवलंब्य संस्कृतमपि व्यवहारभाषाऽऽसीदिति महताऽऽडंबरेण निरूपणमाधुनिकानां असकृत् कर्णपथमागच्छति । मृतभाषागोष्ठ्यामस्याः प्रवेशवारणं करणीयेष्वन्यतमम् । तदर्थेयं नैषधश्लोकप्रथनप्रवृत्तिः । सुलभोऽन्यो मार्गः— वयमसकृत् संस्कृतज्ञैः देशान्तरगतैः मिलामः । पण्डितसभासु अन्यत्र च । तत्र यद्यपि शास्त्रचर्चादिके संस्कृतमुपयुञ्जमः । परं लोकव्यवहारे यदि न मूकीभवामः, अन्योन्यभाषानवबोधभीतेः, परं संस्कृत एव व्यवहराम, तदेयं मृतभाषाप्रथा स्वयमेवापगच्छेन्नाम । संस्कृतं न मातृभाषेति तु मातृभाषास्वरूपानभिज्ञानां वचः । भाषा भाष्यमाणा जीवति । भगवतो घटनेयं चित्रा, यत्कांश्चित् तदेकभाषाभिज्ञान् अकरोदिति । नागपुरटैम्स् पत्रिकायाः संपादकाः संस्कृतभाषाविषये लेखं कमपि प्रकाशितवन्तः, यं तथैवात्र प्रकाशयामः अन्यत्र पृष्ठे । लोकसंमर्द-यातायातविहीनो हैमवतः प्रदेशः संस्कृतैकभाषिणस्तथा रक्षति, यथा तैः भाषान्तरमधिकृत्य न श्रुतमपि । संस्कृतैकपरिपाल्याः द्विवचन- लकारबहुत्वादिनियमाः व्यावहारिकभाषायामपि तैस्तथैव परिपाल्यन्ते,

इति सत्यं वयं पण्डिताः शोचनीयाः, येऽवसरेऽनवसरे वा "संस्कृते द्विवचनमावश्यकं वा? संस्कृते लकारबहुत्वपरिहारः कथं कार्यः" इति असकृद्विचारं पुरस्कुर्मो गोष्ठीषु। तादृशान् संस्कृतमातृभाषाकान् द्रष्टुमुत्सहते मनः, तैस्सह वस्तुं च। परं बिभेति चेतः, यदस्मत्संगत्या ते विस्मरेयुरिमां, कामपि कृत्रिमां असत्सहवाससंक्रान्तां भाषां आश्रयेयुः, यथा वयं आंगलीमाश्रितवन्तः इति।

## SANSKRIT STILL SPOKEN

### EDITORIAL—'NAGPUR TIMES' 21—9—80

"One often hears the controversy about Sanskrit being a 'dead language'. The vast, invaluable Sanskrit literature both Vedic and classical, is being studied all over the world. In India it is a 'living' language in the sense that chanting of Sanskrit Mantras reverberates through almost every Hindu home and every Hindu temple, every day, in the country. This language is also carried through the nook and corner of the country by the All India Radio through its daily Sanskrit news bulletin. These are symptoms of 'living' and not of 'death'. But perhaps those who say 'Sanskrit is a dead language' use the word 'dead' in the sense that this is no longer a spoken language or a language of dialogue. Even scholars have tended to accept this view because most of the diverse Hindu Communities speak their own regional dialects of which Sanskrit is claimed to be grand-mother. But an astounding fact has come to light that there is at least one community in the country which still speaks in Sanskrit. This is revealed by a scholar, one Mr. D. D. Sharma, who has over years been collecting material on Tibet-Burman languages of the Himalayan region.

Mr. Sharma recently visited a part of Himachal Pradesh and found that Sanskrit is being spoken even today by illiterate people, including women, belonging to

the lowest rung of the society. He says, some three years ago he was told by someone from Lahaul that there was an Aryan tribe, in a small pocket in the Lahaul sub-division, which spoke a dialect which closely resembled Sanskrit. The temptation to meet Sanskrit-speaking people, to hear Sanskrit as a living tongue and to feel the thrill of musical sound proved irresistible for him and he visited Lahaul in June this year.

The mountainous region of Lahaul has four valleys, the most fertile being Pattan which is the abode of the little known Sanskrit-speaking Aryan tribe. They do not know when their forefathers migrated here but it may be centuries ago. They are treated as Scheduled Castes and they work as agricultural labourers. They have retained most of the features of early Aryan Culture. They maintain the gotra cult and marry strictly within their community. Mr. Sharma says, the peculiarity of their dialect is that it has preserved not only the vocabulary of Sanskrit but also its synthetic grammatical structure. 'It shows inflection for all three numbers and seven cases in nominal and pronominal bases and for all the three numbers, persons and tenses in verbal bases'. Mr. Sharma feels that the geographical compartmentalisation, effected by the great divide, has helped in preserving the purity of the dialect, unaffected by the linguistic changes taking place in Indo-Aryan languages on the mainland.

The whole class of Sanskrit research scholars are likely to be astounded by Mr. Sharma's discovery. Many research books have been written on Lahaul and its tribes but none of them makes a mention of the existence of a dialect that preserves most of the characteristics of the Sanskrit language. Official records have also reportedly missed this miracle. In fact the Himachala Pradesh Govt. could bring out a documentary on this novel feature which would have caught the Nation's imagination. Now that Mr. Sharma's discovery is published (publicised), the

Films Division of India would do well to take note of it. There are some scholars who have been arguing that Sanskrit was never a spoken language but a 'class language' i. e. taught to a certain class in rishi schools in ancient times. This discovery is likely to take the whole Sanskrit World by storm".

[*The above editorial of the 'Nagpur Times' is an eye-opener to all Sanskrit scholars and lovers of Samskrit both in India and of the outside world. It will be good and beneficial if the Himachal Pradesh Government and the Films Division of India are pleased to carry out the suggestions offered by the learned editor of the 'Nagpur Times'. It will be a great boon if Dr. Sharma takes further effort to send a short account of his research findings to all leading Newspapers and Sanskrit periodicals all over the country along with some specimens of the ordinary day-to-day conversation types of the Lahaul Community whose speaking dialect is Samskrit—Editor.*]

## வருந்துகின்றோம்

ஓய்வுபெற்ற ஸ்தலஸ்தாபன தணிக்கை மானேஜர், **ஸ்ரீ S. மீனாக்ஷிஸுந்தரமய்யர்** அவர்கள் சென்ற 20—10—1980 தினம், ஹாலாஸ்ய க்ஷேத்ரமான மதுரையில், தமது 90-ஆவது வயதில் சிவலோகப்ராப்தி அடைந்தார் என்பதை அறிந்து ஸம்ஸ்க்ருதஸ்ரீ நிர்வாகம் துயரமடைந்து ஆழ்ந்த அனுதாபத்தை அன்னாரின் குடும்பத்தாருக்குத் தெரிவித்துக்கொள்கின்றது.

மிகுந்த தார்மிக சிந்தனையுள்ள ஸ்ரீ மீனாக்ஷிஸுந்தரமய்யர் சென்னை ஸம்ஸ்க்ருதக் கல்விமன்றத்திற்கு உறுதுணையாக இருந்தும், மன்றத்திற்கு பெரும் நன்கொடை வழங்கியும் ஸம்ஸ்க்ருதத்திற்குச் சிறந்த தொண்டுசெய்துள்ளார் என்பது குறிப்பிடத்தக்கது.

—ஆசிரியர்.

# शैवसिद्धान्तः (२)

पे. तिरुज्ञानसंबन्धः

पशवश्च त्रिविधाः

अनाद्याणवमल–कर्ममल–मायामलयुक्ताः अस्मदादयः सकलाः। प्रलयकाले मायायाः उपरमे आणवमलकर्ममलयुताः प्रलयाकलाः। दीक्षया कर्मक्षये आणवमलमात्रसद्भावे ते विज्ञानकलाः इति कथ्यन्ते। शिवः तान् मुक्तिकल्पे विद्येश्वरपदे नियोजयति।

जीवात्मपरमात्मनोः भेदः श्वेताश्वरोपनिषदि एवं प्रदर्शितः—यद्यप्युभावपि नित्यौ तथाऽपि एकः किञ्चिज्ज्ञः, अपरः सर्वज्ञः, एकः अनीशः, अपरः ईशः (१-९) इति। जीवात्मनां पारतन्त्र्यं अरुळ्-नन्दिशिवाचार्यैः एवं निर्दिष्टम्—'जीवात्मनां ज्ञानं सर्वज्ञशिवाधीनम्। स्वयं शिवं ज्ञातुमपि न प्रभवन्ति जीवाः। परमकारुणिकः शिव एव सर्वं जानाति जीवान् ज्ञापयति च। (शुपाक्कं ५–५) यथा आत्मा दृशोः दर्शयिता एवं शिवः आत्मनः दर्शयिता' इति च मेय्कण्डार् शिवज्ञानबोधे (श्लो ११)।

पाशाः त्रिप्रकाराः, आणवमलः कर्ममलः मायामलः इति। प्रथमः 'अणुः' इत्यपरनाम्ना जीवेन अयुतसंबद्धत्वात् आणवः इत्युच्यते। जीवस्य अनादिसिद्धपारतन्त्र्यबीजं एतन्मूलकमेव। जीवशक्तिं क्रियाज्ञानात्मिकां आवृणोत्ययं मलः। पश्वनुग्रहार्थं तेषां परिपाकाभावदशायां मायीयैः पदार्थैः तान् संयोजयति तिरोधात्री शिवशक्तिः। परिपक्वदशायां पुनः सैव अनुग्राहिका सती मलावरणं अपनयति कर्मबन्धं श्लथयति।

द्वितीयः कर्ममलः। धर्माधर्मात्मकं कर्म। कर्मणः प्रवाहनित्यता अभ्युपगम्यते। तत्फलं च दैवमानुषादिषु प्रकृतिषु जन्म, आयुः, सुखदुःखादिभोगश्च। यत्क्रियते तत्कर्म। तत्फलमपि लक्षणया कर्मेत्युच्यते। पूर्वं 'दृष्टं' इति, उत्तरं 'अदृष्टं' इति च मतङ्गागमे व्यपदिष्टम्।

मायाश्रितं कर्म तृतीयः मायामलः। मायातत्त्वं जगद्बीजं अनादि विभु एकं च। इयं माया शुद्धा अशुद्धा इति द्विप्रकारा। शुद्धायाः संभूतानि नाद-बिन्दु-सादाख्य-ईश्वर-विद्यातत्त्वानि। अशुद्धायाः विलसितानि कला नियतिः कालः विद्या रागः प्रकृतिः गुणः चित्तं बुद्धिः अहंकारः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि शब्दतन्मात्राणि पञ्चभूताः इति। आहत्य षट्त्रिंशत्तत्त्वानि। मलपरिपाके दीक्षया तेषां उपसंहारः यदा क्रियते तदा अन्ततः शिवसायुज्यरूपः मोक्षः स्यात्।

'तत्त्वज्ञानान्मुक्तिः। ज्ञानमेव मुक्तिलाभे परमं साधन'मिति सिद्धान्तः। 'ब्रह्मविदाप्नोति परं' इति श्रुतिः। 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति श्वेताश्वतरः। तथापि भक्तेः प्राथमिकं स्थानं अस्मिन् मते सुप्रतिष्ठितम्। 'आत्मोपकारके शिवे परां भक्तिं कुर्यात्' इति मेय्कण्डार् (शिवज्ञानबोधः श्लो ११)। अधिकारिभेदानुकूलं चर्या-क्रिया-योग-ज्ञानमार्गेषु प्रवेशार्हा भवन्ति जीवाः। एत एव मार्गाः दासमार्गः सत्पुत्रमार्गः सखिमार्गः सन्मार्गः इत्यप्युच्यन्ते। अन्यतमे मार्गे जीव-प्रवृत्तावपि शिवस्य अनुग्रहं विना मुक्तिर्न लभ्या इति स्थितिः। 'यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा वृणुते तनूं स्वां' इति श्रुतिः। (कठोपनिषदि २–२३) 'ईश्वरस्य प्रसादं विना जीवः न कदाचन मोक्षं याति' इति पौष्करोऽपि। (Collected lectures on Saiva Siddhanta 1960–73–Annamalai University P. 387)

मुक्तिदशायां केवलं जीवपरमात्मनोः अद्वैतभावः अनुभूयते। रौरवागमे च इत्थं वर्णितं मुक्तिस्वरूपं—

देहपाते चिदानन्दं शिवैकरसतां व्रजेत्।
न पुनर्भेदमायाति सरित्तोयमिवांबुधौ॥

अत्र जीवात्मनोरभेदः, फलस्य तद्गतरसस्य, वह्नेः तद्गत-तपनशक्तेः, पुष्पस्य तद्गतगन्धस्य च वीणायाः तदुत्थापितनादस्य च

यादृशः, तादृश एव इति मनवाचकङ्कडन्तार् (उण्मै विळक्कं श्लो ४६)। शिवाग्रयोगी च स्वभाष्ये 'शिवैकीभावेन शिवानन्दानुभव एव मोक्षः' इति मोक्षं लक्षयति ।

"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति मुण्डकोपनिषत् । यद्यपि मुक्तिदशायां जीवपरयोः आनन्दस्वरूपतया साम्यं भवति तथापि जगत्सृष्ट्यादिकरणे जीवस्याधिकारो नास्ति । 'भोगमात्रसाम्यलिङ्गात्' इति ब्रह्मसूत्रवचनं अत्र प्रमाणम् ।

मुक्त्यनुभवश्च आनन्दरूपः बहुधा वर्णितः। 'रसो वै सः। रसं ह्येवायं लब्ध्वा आनन्दी भवति' इति श्रुतिः ।

शिवार्कशक्तिदीधित्या समर्थीकृतचिद्दृशा ।
शिवं शक्त्यादिभिः सार्धं पश्यत्यात्मा गतावृतिः ॥

इति निःश्वासकारिकावचनं शिवदर्शनं वर्णयति। शिवदर्शनं नाम शिवभोगः, शिवस्य आनन्दस्य अनुभवः, न त्वात्मनः आनन्दस्य इति सिद्धान्तः। श्रीगुरुज्ञानसंबन्धेनोक्तं—

உள்ளமலநீங்கி ஓங்கு சிவானந்த வெள்ளந்திளைத்து
அதுவாய் மேவுதலே ... ... சிவாகமத்திற் சிந்தாந்தமுக்தி.
(தர்மபுரம் ஸ்ரீ குருஞானஸம்பந்தரின் முத்தி நிச்சயம்)

जीवन्मुक्तस्तु यथा घटनिष्पत्त्यनन्तरमपि चक्रः कञ्चित्कालं भ्रमन्नास्ते, तद्वत् पूर्वसंस्कारबलात् लोकव्यवहारे व्यापृत इव लक्ष्यते। अन्ततः घटे भग्ने यथा दीपः सर्वतः संप्रकाशते तथा देहपाते जीवन्मुक्तः सर्वदा भाति (शतरत्नसंग्रहे–देव्यामतागमः श्लो ९१) इति शम् ।

---

लेखकोऽयं मद्रासराज्यसर्वकलाशालाया रेजिस्ट्रार्पदवीमधिकृत्येदानीं निवृत्तस्ततः। लेखोयं 10-2-80 दिने मदरासस्थ विवेकानन्दकलाशालायां प्रवृत्ते संस्कृतेऽधिवेशने प्रस्तुतः ।

ஹிமாசலப் பிரதேசத்திலுள்ள லாஹௌல பகுதியிலுள்ள பத்தன் பள்ளத்தாக்கில் வாழும் ஒரு வகுப்பினரின் பேசும் மொழி இலக்கண சுத்தமான ஸம்ஸ்க்ருதமாக உள்ளது என திரு. D. D. சர்மா என்ற மொழி ஆராய்ச்சியாளரின் கண்டுபிடிப்பு 'ஸம்ஸ்க்ருதம் வழக்கொழிந்த மொழி' என்ற சிலரின் தப்பான அபிப்பிராயத்தை நீக்கும் எனவும் ஸம்ஸ்க்ருத உலகத்தையே ஆச்சர்யத்தில் மூழ்கடிக்குமென 'நாக்பூர் டைம்ஸ்,' பத்திரிகை சென்ற 21—9—80இல் தலையங்கம் தீட்டியுள்ளது.

* * * * * *

22—10—80 தினம் புது டில்லியில், வால்மீகி ஸமாஜத்தின் விழாவில் கலந்துகொண்ட பிரதமர் மாத்ருஸ்ரீ இந்திராகாந்திக்கு, உத்திரப்பிரதேச உள்துறை ராஜாங்க அமைச்சர் திரு. ஹரிசிங், வால்மீகி ராமாயணத்தின் பிரதி ஒன்றை அளித்தார்.

* * * * * *

ஆந்திரப் பிரதேசத்தில் எல்லா மாவட்டங்களிலும் பல கட்டங்களில் ஹிந்து தர்ம பரிபாலன ஸபையின் நடவடிக்கைகளை விரிவுபடுத்தும் திட்டம் ஒன்று தீர்மானிக்கப்பட்டு விரைவில் செயலுக்கு வருமெனத் தெரிகிறது.

* * * * * *

கொங்குப் பிரதேசத்தில் பொதுமக்களிடையே வழக்கிலுள்ள பெயர்கள் பல தொன்மை ஸமூகப் பண்பாடுகளுடன் தொடர்பை வெளிப்படுத்துவதுடன் அவர்களது பண்டைத் தமிழகத் தொடர்பையும் வெளிப்படுத்துவதாகத் தெரிகின்றது. உதாரணமாக 'குன்னடையாக் கவண்டன்' என்ற பெயர் திருச்சிராப்பள்ளி மலையின்மீது கோயில் கொண்டுள்ள ஸ்ரீ தாயுமானவரின் பண்டைப் பெயரான, 'குன்றுடையான்' என்பதுடன் தொடர்புள்ளதெனக் காண்கிறது. (தகவல் – தினமணிச் சுடர்)

* * * * * *

சென்ற விஜயதசமி, 19—10—80 தினம் திருச்சிராப்பள்ளி ஸம்ஸ்க்ருத ஸாஹித்ய பரிஷத் நடத்திய காளிதாஸ ஜயந்தி விழாவில், ஸ்ரீ G. ஸௌந்தரம் அவர்களின் தலைமையில், ஸ்ரீ S. M. கிருஷ்ண சர்மா, ஸ்ரீ திருமலாசார்யார் ஆகியோர், "காளிதாஸ காவியங்களில் காணப்படும் ராஜதர்மம்" "காளிதாஸனின் படைப்புகளில் பொதுவான தர்மம்" என்பவை பற்றி சொற்பொழிவாற்றினர். பின்னர் 'ஆக்ஞா குரூணும்ஹி அவிசாரணீயா' என்ற காளிதாஸனின் குறிப்பை ஒட்டி நான்கு வித்வான்கள் ஸம்ஸ்க்ருதத்தில் உரையாடல் நிகழ்த்தினர். வந்திருந்த வித்வான்களுக்கு ஸ்ரீ G. ஸௌந்தரம் ஸம்பாவனை வழங்கினார்.

## त्रिणवतितमः पाठः—பாடம் 93 (தொடர்ச்சி)

### कर्मणि प्रयोगः—விளக்கம்-4 (தொடர்ச்சி)

3. எழுவாயின் விசேஷணங்களாக வரும் சொற்கள், எழுவாய் எந்த வேற்றுமையிலிருக்கிறதோ அந்த வேற்றுமையில் தான் இருக்கும். எழுவாயின் வேற்றுமை மாறும் போது, அதன் விசேஷணங்களின் வேற்றுமையும் அதனை ஒட்டி மாறும். அப்படியே செயப்படுபொருளின் விசேஷணங்களும், செயப்படு பொருள், வேற்றுமை மாற்றங்களை அடையும் போது தாமும் மாறி விடும். (24 ம் பாடம் பார்க்க)

गुणवान् विनीतः पुत्रः श्रवणः वृद्धौ अन्धौ पितरौ अपोषयत् । என்ற வாக்கியத்தை எடுத்துக்கொள்வோம். श्रवणः पितरौ अपोषयत् என்பது முக்கிய வாக்யம். श्रवणः என்ற எழுவாய் கர்மணி பிரயோகத்தில் श्रवणेन என மூன்றும் வேற்றுமைக்கு மாறும் போது गुणवान् विनीतः पुत्रः என்ற அதன் விசேஷணங் களும் गुणवता विनीतेन पुत्रेण என்று மாறுகின்றன. पितरौ என இரண்டாம் வேற்றுமையிலிருந்த செயப்படு பொருள் கர்மணி பிரயோகத்தில் पितरौ என முதல் வேற்றுமைக்கு மாறும் போது அதன் விசேஷணங்களான वृद्धौ अन्धौ முதல் வேற்றுமை மாற்றத்தைப் பெறும். இங்கு துவிவசனத்தில் இருப்பதால் மாற்றத்தின் வித்தியாசம் வெளிப்படையாகத்தெரியவில்லை. இதனை வெளிப்படையாகக் காட்ட अन्धं वृद्धं पितरं अपोषयत्, अन्धां वृद्धां मातरं अपोषयत् என்று கர்த்தரிபிரயோகத்தில் வைத்துக் கொண்டால், अन्धः वृद्धः पिता எனவும் अन्धा वृद्धा माता எனவும் கர்மணி பிரயோகத்தில் மாறுவதைக் காணலாம். கர்த்தரி பிரயோக த்தில் உதாரணத்திற்காக எடுத்துக்கொண்ட வாக்கியம்—கர்மணி பிரயோகத்தில்

गुणवता विनीतेन पुत्रेण श्रवणेन, वृद्धौ अन्धौ पितरौ अपोष्येताम् । (अ+पोष्+य+इतां) என்று மாறுகிறது.

तपस्वी वाल्मीकिः तपःस्वाध्यायनिरतं वाग्विदां वरं मुनिपुंगवं नारदं पर्यपृच्छत् என்பது ஸம்க்ஷேபராமாயணத்தின் முதற் செய்யுளின் வாக்கிய அமைப்பு. தவசியான வால்மீகி தவம் வேத மோதுதல் இவற்றில் நாட்டமுள்ளவரும் பேசத்தெரிந்தவர்களில் சிறந்தவரும் முனிவர் பெருமானுமான நாரதரை வினவினார். இது கர்த்தரி பிரயோகம். இதனைக் கர்மணி பிரயோகத்தில் மாற்றும் போது

तपस्विना वाल्मीकिना तपःस्वाध्यायनिरतः वाग्विदां वरः मुनिपुंगवः नारदः पर्यपृच्छ्यत (परि+अ+पृच्छ्+य+त) என்பது முழுவிடை.

4. எழுவாய் செயப்படுபொருள் இவற்றிற்கு ஏதேனும் உபமானமிருந்தால் அவைகளும் முக்கிய வாக்கியத்தின் எழுவாய் செயப்படு பொருள்கள் அடையும் மாற்றத்திற்கேற்ப மாறும்.

वीरः हनुमान्, मेरुशिखरे विष्ठितं तोयदं इव सिंहासने उपविष्टं रावणं आलोकयत्।

வீரனை அனுமான் மேருமலைக்குன்றில் நன்கு அமர்ந்திருக்கும் மேகத்தைப் போன்று சிம்மாஸனத்தில் அமர்ந்திருக்கும் ராவணனைப் பார்த்தார். இவ்வாக்கியத்தில் செயப்படு பொருளுக்கு உபமானம் கொடுக்கப்பட்டுள்ளது. हनुमान् रावणं आलोकयत् என்பது முக்கிய வாக்கியம். वीरः என்பது हनुमान् என்பதன் விசேஷணம். கர்மணியில் वीरेण हनुमता என இதனை மாற்றுகிறோம். रावणं என்ற செயப்படுபொருள் रावणः என முதல் வேற்றுமைக்கு மாறுகிறது. அதன் விசேஷணமான सिंहासने उपविष्टं என்பது सिंहासने उपविष्टः என மாறுகிறது. ராவணனுக்கு உபமானமான तोयदं (மேகத்தை) என்பது तोयदः என்றும் मेरुशिखरे विष्ठितं என்ற அதன் விசேஷணம் मेरुशिखरे विष्ठितः என்றும் மாறுகின்றன.

वीरेण हनुमता मेरुशिखरे विष्ठितः तोयदः इव सिंहासने उपविष्टः रावणः आलोकयत (आ+अ+लोक्+य+त) என்பது முழுவிடை.

ते राक्षसाः वाहनानि बहिः स्थापयित्वा सिंहाः गिरिगुहामिव सभां प्राविशन्। அந்த அரக்கர்கள் வாஹனங்களை வெளியே நிறுத்தி விட்டு சிங்கங்கள் மலைகுகையை (நுழைவது) போல் ஸபையை நுழைந்தனர் என்பது பொருள். இங்கு राक्षसाः सभां प्राविशन्

என்பது முக்கிய வாக்கியம். ते என்பது எழுவாயின் விசேஷணம். கர்த்தாவான ते राक्षसाः என்பது तैः राक्षसैः என 3ம் வேற்றுமையில் மாறுகிறது. सभां என்ற செயப்படுபொருள் सभा என முதல் வேற்றுமையில் மாறுகிறது. तैः राक्षसैः सभा प्राविश्यत (प्र+अ+विश्+य+त) सिंहाः என்பது எழுவாய்க்கும் गिरिगुहां என்பது செயப்படுபொருளுக்கும் உபமானம். எனவே அவ்விரண்டு சொற்களும் முறையே 3–1 வேற்றுமைக்கு மாறுகின்றன. सिंहैः गिरिगुहा इव என. वाहनानि बहिः स्थापयित्वा என்ற சொற்றொடர் முக்கிய வினைச்சொல்லுடன் ஸம்பந்தப்படாததால் அங்கு மாற்றம் ஏதுமில்லை. ஆகவே
तैः राक्षसैः वाहनानि बहिः स्थापयित्वा सिंहैः गिरिगुहेव सभा प्राविश्यत என்பது முழுவிடை.

பயிற்சி :—பிரயோகத்தை மாற்றிப் பொருள் எழுதவும்.

1 बलिष्ठाः वानराः, द्रुमैः आवृतं सह्यपर्वतं, अलंघयन्।

2 क्रूराः व्याघ्रादयः मृगाः, साधून् हरिणादीन्, हत्वा, भक्षयन्ति।

3 आदिकविः वाल्मीकिः, आश्रमे, लक्ष्मणेन परित्यक्तां सीतां, असान्त्वयत्।

4 वीरः हनुमान्, शयने सुप्तं रावणं, आलोकयत्।

5 अहं भूतगणाधिसेवितं कपित्थजंबूफलसारभक्षितं उमासुतं शोकविनाशकारणं विघ्नेश्वरपादपंकजं गजाननं नमामि।

6 अहं शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं सर्वलोकैकनाथं विष्णुं वन्दे।

## விளக்கம் 5

ஸம்ஸ்க்ருத மொழியில் சில தாதுக்கள் இரு செயப்படுபொருள்களுள்ளவை. அவை த்விகர்மங்கள் (द्विकर्मकाः). அவை கர்மணிப் பிரயோகத்தில் மாறும் விதத்தை இனி காண்போம்.

1 दुह् दोग्धि கறக்கிறான் (2 வி ப)
2 याच् याचते யாசிக்கிறான் (1 வி ஆ)
3 पच् पचति சமைக்கிறான் (1 வி ப)

4 दण्डू दण्डयति தண்டிக்கிருன் (10 வி ப)
5 रुधू रुणद्धि தடுத்து ஓட்டிச்செல்கிருன் (ஹிஜாக்) (7 வி ப)
6 प्रच्छ्-पृच्छ्-पृच्छति கேட்கிருன் (1 வி ப)
7 चि चिनोति பறிக்கிருன் (8 வி ப)
8 ब्रू ब्रवीति சொல்கிருன் (1 வி ப)
9 शासू शास्ति உபதேசிக்கிருன் (2 வி ப)
10 जि जयति வெல்கிருன். (பந்தயம்) (1 வி ப)
11 मथू मथ्नाति கடைகிருன். (9 வி ப)
12 मुष् मुष्णाति கொள்ளையடிக்கிருன் (9 வி ப)
13 नी नयति கொண்டுபோகிருன் (1 வி ப)
14 हृ हरति திருடிக்கொண்டு போகிருன் (1விப)
15 कृष् कर्षति இழுத்துச்செல்கிருன் (1 வி ப)
16 वह वहति சுமந்து செல்கிருன் (1 வி ப)
(வி–விகரணம், ப–பரஸ்மைபதம், ஆ–ஆத்மநேபதம்)

இவற்றின் உதாரணங்கள்

1 गोपालः गां पयः दोग्धि ।
இடையன் பசுவை பாலை கறக்கிருன்.

2 विश्वामित्रः दशरथं रामं अयाचत ।
விச்வாமித்ரர் தசரதரை ராமனை யாசித்தார்.

3 पाचकः तण्डुलान् ओदनं पचति ।
சமையற்காரர் அரிசியை (சாதம்) சாதமாக சமைக்கிருர்.

4 न्यायाधिपः अभियुक्तं शतं रूप्यकाणि दण्डयति स्म ।
நீதிபதி குற்றம் சாட்டப்பட்டவனை 100 ருபாய்களை தண்டித்தார். (அபராதம் விதித்தார்)

5 अपरिचितः कश्चित् यूरोपगामिविमानं देशान्तरं अपरुणद्धि स्म ।
இன்னார் என அறியாதவர் ஒருவர் ஐரோப்பா செல்லும் விமானத்தை வேறு தேசத்தைக் கடத்தி அடையச்செய்தார்.

6 आचार्यः माणवकं षट् प्रश्नान् अपृच्छत् ।
ஆசிரியர் மாணவனை ஆறு கேள்விகளைக் கேட்டார்.

अतिवत्सलमप्यनीतिभाजं परितत्याज स पार्थिवो विदूरे।
उचितानुचिते ह्यचिन्तयित्वा सुतमित्राद्यभिमानिता जनानाम्॥

மக்கள் தக்கது தகாதது பற்றிச் சிந்திக்காமல் புதல்வன் நண்பன் என்றெல்லாம் பற்று வைப்பர். ஆனால் அவ்வரசனோ மிகவும் அன்புள்ளவனையும் அவன் நேர்மையில்லாதவனாயின் தூரத்தில் விலக்கினான். 22

निजपुत्रसमं निरीक्षमाणे निखिलं लोकममुत्र भूमिपाले।
जनकप्रमुखाः प्रथा जनानां व्यपदेशैकफलास्तदा बभूवुः॥

அவ்வரசன் எல்லா மக்களையும் தனது புதல்வர்களைப்போல் கருத்துடன் காப்பாற்றி வந்தபோது, மக்களிடையே தகப்பன் முதலிய பெருமைகள் பெயரளவிற்குப் பயன்படுபவையாக அமைந்தன. (அரசன் பெற்றோரின் பொறுப்பைத்தான் ஏற்று எல்லோரையும் காப் பாற்றப் பெற்றோர்கள் பெயரளவில் பெற்றோர்களாக இருந்தனர்.) 23

अतिशूरतरोऽप्ययं क्षितीशः परलोकाद्विभयांबभूव कामम्।
महते नृपतेर्हि नास्तिकत्वं प्रकृतीनां पतनाय तस्य चापि॥

மிகச்சிறந்த வீரராயினும், இந்த அரசன், மறுமை பற்றி மிகவும் பயந்தார். அரசன் நாஸ்திகனாக இருப்பது (மறுமையில் நம்பிக்கை யில்லாமலிருப்பது) மக்களது பெரும் வீழ்ச்சிக்கும் தன் வீழ்ச்சிக்கும் ஏதுவாகுமல்லவா? 24

मृदुलस्मितमञ्जुलं महीपो मधुरं सर्वजनैस्स संबभाषे।
सुजनो नहि दुर्वचः प्रतीपेऽप्यविरोपव्रणदायकं प्रयुङ्क्ते॥

அரசன் எல்லாமக்களுடனும் மென்மையான புன்சிரிப்பால் அழகாகவும் இனிமையாகவும் பேசினார். நல்லவர் சத்துருவிடமும் ஆற்றமுடியாத புண்ணைத்தரும் சுடு சொல்லை உபயோகிக்கமாட்டார். 25

क्षितिपालमणेरमुष्य लोकैर्मधुरव्याहृतिनन्दनं न चित्रम्।
कियती जगतां रतिर्हि किञ्चिन्मधुरं कूजति कोकिले तिरश्चि॥

அரசர்களுள் சிறந்த இவரது இனிய பேச்சை மக்கள் பாராட்டுவது வியப்பதற்கில்லை. பிராணி இனத்தைச் சேர்ந்த குயில் ஏதோ சிறிது இனிமையாகக் கூவுவதில் உலகிற்கு எத்தனை ஈர்ப்பு ஏற்படுகிறது? 26

सति च प्रमदाशते समाने विषये नैष भृशं ससज्ज भूयः।
विरतिस्तु भवेदकिञ्चने या न हि सा नाम विवेकिता नराणाम्॥

நூற்றுக்கணக்கான அந்தப்புற மங்கைகளிருந்தும் அரசர் விஷய சுகத்தில் அதிகம் ஒட்டவில்லை. வசதியற்றவன் விஷய சுகத்தில் ஈடுபடாமலிருப்பது என்பது விவேகமுள்ளவனின் செயலென மதிப்பதற்கில்லை. 27

क्षितिपोऽनुदिनं परावरज्ञान् महतो वृद्धजनानयं सिषेवे।
मनुजस्य हि तादृशो महद्भिः सहवासः सकलार्थसिद्धिहेतुः॥

அரசன் தினமும் எல்லாமறிந்த முதியவர்களான பெரியோர்களை வழிபட்டு வந்தார். மனிதனுக்கு அத்தகைய பெரியோர்களின் சேர்க்கை எல்லாச் செல்வங்களும் சித்திக்கக் காரணமல்லவா? 28

अतिभक्तियुतो मुनीन् समेतान् विधिवत्सत्कृतवानसौ विधिज्ञः।
अतितीक्ष्णतपःप्रभावयुक्तः कुशलं हन्ति मनागुपेक्षितोऽपि॥

தான் சந்திக்கும் முனிவர்களை முறைப்படி முறையறிந்த சிறந்த பக்திமானான அவர் உபசரித்தார். மிகக்கடுமையான தவமுள்ளவர் சிறிது அவமதிக்கப்பெற்றாலும் க்ஷேமத்தைப் பாதிப்பர். 29

अनुसृत्य तु धर्ममर्थकामावनिशं साधयति स धर्मवित्सः।
अवनीशितुरर्थकामलोभादपरं दुःखमिहास्ति किं जनानाम्॥

தர்மமறிந்த அந்த அரசர் தர்மத்தை ஒட்டிப் பொருளையும் இன்பத்தையும் கூட்டுவித்தார். அரசரது பொருளிலும் இன்பத்திலும் உள்ள பேராசையைவிட மக்களுக்குத் தீமை தருவது வேறொன்றுண்டோ? 30

निखिलैर्विनुते नृपे समन्तात् दृढसंस्थापितनीतिसेतुबन्धे।
अतिचंचलचंचलापि लक्ष्मीः स्थिरतामाप इवावसत्तटाके॥

அரசர் எல்லோராலும் வணங்கப்பட்டவராயும், எல்லாவிடத்திலும் நேர்மையான ஆட்சி எனும் வரப்பைத் திடமாக அமைத்தவராயும் இருந்த போது, மிகவும் நிலையற்ற சஞ்சலமான லக்ஷ்மி (செல்வம்) கூட குளத்தில் அடங்கிய நீர்போல் ஸ்திரத்தின்மையை அடைந்தது. 31

सुगुणैः स वृतः परिच्छदैः स्वैरभिगम्यो भृशमारराज गुण्यः।
सुरभिः शिशिरा पटीरवल्ली सुखगम्या न हि दन्दशूकवीता॥

நற்குணமுள்ள தனது பரிவாரங்களால் சூழப்பட்ட அந்த அரசன் குணவானுகவும் புகழ்பெற்றவராகவும் எல்லோராலும் எளிதில் தொடர்பு கொள்ளத்தக்கவராகவும் விளங்கினுர். சந்தனச் செடி நல்ல மணம் உள்ளதும் இதமான தன்மையுள்ளதுமானுலும் விஷமுள்ள கொடிய பாம்புகளால் சூழப்பெற்றதானுல் சுகமாக அதனை அணுக முடியாது அல்லவா? 32

सहजैरतिदारुणैस्स दोषैर्मदमोहप्रमुखैरधः पतन्तम्।
स्वयमुन्नमयन् समस्तलोकं दृढदण्डेन दधार लोकपालः॥

இயற்கையாக அமைந்ததும், மிகக்கொடுமையானவையுமான திமிர் மயக்கம் முதலிய கேடுகளால் கீழ்நிலையில் தானே விழுகின்ற எல்லா மக்களையும் திடமும் நேர்மையும் கொண்ட தன் ஆட்சித் திறனுல் மேல் நிலைக்குக் கொணர்ந்து, உலகை ஆண்டு வந்த அரசன் தாங்கினுர். 33

अकलंकमसौ प्रजन् सुनीत्या स्वयशोभिः शुभवासनां वितन्वन्।
सततं च भरन् स साभिमानं स्वशरीरान्तरमाततान राष्ट्रम्॥

தனது நேர்மையான ஆட்சித்திறனுல் (மன) அழுக்கேருமல் (தூய்மை பெறும்படி) குளிப்பாட்டித் துடைத்து விடுபவராயும், (அரிய தனது நற்பணிகளால் ஏற்பட்ட) தன் புகழால் (மக்களிடையே) ஆழ்ந்த நல்லெண்ணத்தைப் பரப்புபவராயும், எப்போதும் தன்னுடையவர்களாக அவர்களை மதித்துத் தாங்குபவராயும் அந்த அரசர் தன் மற்ருேர் உடல் போல் ராஜ்ஜியத்தையும் பேணி வளர்த்தார். 34

प्रथमं सुखितं विधाय राष्ट्रं स्वसुखं भूपतिराममर्श पश्चात्।
न हि साधुजनः परोपकारान्निजसौख्यं बहु मन्यते कदापि॥

முதலில் தன் ராஜ்ஜியத்து மக்களை சுகத்தை அடைந்தவர்களாக ஆக்கிய பின்னர் தன் சுகத்தை நாடினுர். நல்லோர் பிறருக்கு உதவுவதை விடத் தன் சுகத்தை ஒரு பொழுதும் பெரிதும் மதிப்பதில்லை, 35

स्वशरीरसमं स्वराष्ट्रकेऽसाववधानेन सुपालितेऽपि जातु।
क्वचिदापतितामनीतिमीशो विषदष्टांगवदच्छिनत्क्षणेन॥

மிகவும் கருத்துடன் தன் உடல்போல் அரசை நன்கு காப்பாற்றிய போதிலும், எங்கேனும் எதிர்பாராது நேர்ந்த அநீதியை விஷம் தீண்டிய உடற்பகுதியைப்போல் நொடியில் வெட்டி அகற்றினுர். 36

जनकः परिपालने प्रजानामुपदेशे गुरुरुत्पथे विनेता ।
स नृपः सुहृदुत्तमो विपत्तौ स्वयमेको बहुधा ररक्ष लोकान् ॥

மக்களைக் காப்பாற்றுவதில் தந்தை, (நல்வழி) போதிப்பதில், ஆசான். கெட்ட வழியில் செல்பவன் விஷயத்தில் அடக்கியாள்பவன், ஆபத்து நேரும் போது உயிர் நண்பன், இப்படிப் பல வகைகளில் தான் ஒருவரேயாகி அந்த அரசர் உலகைப் பாதுகாத்தார். 37

नयने विपुले भृशं तथापि श्रुतिमुल्लंघयितुं तयोर्न शक्तिः ।
इति स श्रुतिमेव सूक्ष्मदृष्ट्यै विदधे मुख्यदृशं विशामधीशः ॥

அகன்ற கண்களாயினும் காதைத் தாண்டிச் செல்ல அவைகளுக்குச்சக்தி இல்லை. (ஸ்மிருதி நூல்கள் (வழிகாட்டுபவையகையால் நயனம்) எத்தனை விரிந்திருந்தும் வேதங்களை (சுருதி) மீறமுடியாது.) அதனால் ஸூக்ஷ்மமாகப் பார்ப்பதற்கு ச்ருதியையே (வேதத்தையே) முக்கியக் கண்ணாக அந்த மக்களதிபர் அமைத்து கொண்டார். 38

सरसैः सवनेऽर्पितैर्हविर्भिः स तथा सर्वसुपर्वणोऽभ्यतार्प्सीत् ।
अनिशं धरणेः पतित्वमीयादयमेवेति यथार्थयेयुरेते ॥

வேள்வியில் நல்ல சுவையுள்ள அவிசுகளை அளித்து எல்லா தேவர்களையும் "எப்போதும் இவனே அரசனாக இருக்கட்டும்" என அவர்களே வேண்டிக்கொள்ளுமளவிற்கு மகிழ்வித்தான். 39

महता मखसंभृतेन तस्य क्षितिजानेः किल धूमसंचयेन ।
वियदंगणमंकितं विशेषादसितं सम्यगवेक्ष्यतेऽधुनापि ॥

அந்த அரசரது வேள்விகளில் குவிந்த பெரும்புகைச் சூழல் படிந்த வான அரங்கம் இன்றும் நன்கு கறுத்தாகக் காணப்படுகிறது. 40

स्वकरस्य सुधीर्वनीपकेष्टाधिकदानांबुकणं परं क्षितीशः ।
नवरत्नमयात्स कंकणादप्यधिशोभावहमन्वहं बभार ॥

நல்லறிவுள்ள அரசர், தன்னிடம் யாசிப்பவர்கள் விரும்புவதை விட அதிகம் தருவதற்கான நீர்வார்ப்பின் போது தன் கைகளில் துளித்து நிற்கும் நீர்த்துளிகளை நவரத்னங்களாலான கங்கணத்தை விட அதிக அழகு தருவதாக (மதித்து) எப்போதும் தாங்கினான். 41

" நல்லார்கண் பட்ட வறுமையின் இன்னாதே
கல்லார்கண் பட்ட திரு " திருக்குறள்

R. N. 30478/77—SAMSKRITA SRI—7-11-80



Printed by S. Naganathan, at Theni Printers, Trichy. Edited by Vaidya S. V. Radhakrishna Sastri and Published by A. Kuppuswamy, B. A., B. T., on behalf of the Samskrit Education Society, (Regd.) Trichy Branch : 9, Single Mall Street, Tiruchirapalli-620 002.